# श्री ग णे श स्तो त्रा णि

## संस्कृत अथर्वशीर्ष, स्तोत्रे, कवचे, नामावली इत्यादि

### श्रीगणपतिस्मरणम् ।

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।

स जयति सिंधुरवदनो देवो यत्पादपंकजस्मरणम् ।
वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम् ।।

सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ।
लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ।।१।।

धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ।
द्वादशैतानि नामानि यः पठेत् शृणुयादपि ।।२।।

विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ।।३।।

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशांतये ।।४।।

नमस्तस्मै गणेशाय ब्रह्मविद्याप्रदायिने ।
यस्यागस्त्यायते नाम विघ्नसागरशोषणे ।।५।।

यन्नामग्रहणाद्देवा अपि मंगलमाप्नुवन् ।
ऋद्धिसिद्ध्योः प्रदातारम् तं नमामि गजाननम् ।।६।।

# प्रातःस्मरणम्।

उत्तिष्ठोत्तिष्ठ हेरंब उत्तिष्ठ ब्रह्मणस्पते। सर्वदा सर्वतःसर्वविघ्नान्मां पाहि विघ्नप॥ १ ॥ आयुरारोग्यमैश्वर्यं मां प्रदाय स्वभक्तिमत्। स्वेक्षणाशक्तिराद्या ते दक्षिणा पातु मां सदा॥ २ ॥ प्रातःस्मरामि गणनाथमनाथबंधुम्। सिंदूरपूरपरिशोभितगंडयुग्मम्। उद्दंडविघ्नपरिखंडनचंडदण्डम्। आखंडलादि-सुरनायकवृंदवंद्यम्॥। ३ ॥ प्रातर्नमामि चतुराननवंद्यमानम्। इच्छानुकूलमखिलं च वरं ददानम्। तं तुंदिलं द्विरसनप्रिय यज्ञसूत्रम्। पुत्रं विलासचतुरं शिवयोः शिवाय॥ ४॥ प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुंजरास्यम्। अज्ञानकाननविनाशनहव्यवाहम्। उत्साहवर्धनमहं सुतमीश्वरस्य॥ ५ ॥ कराग्रे सत्प्रभा बुद्धिः कमला करमध्यगा। करमूले मयूरेशः प्रभाते कर-दर्शनम्॥ ६ ॥ ज्ञानरूपवराहस्य पत्नि कर्मस्वरूपिणि। सर्वाधारे धरे नौमि पादस्पर्शं क्षमस्व मे॥ ७॥ तारश्रीनर्मदादूर्वा-शमीमंदारमोदित। द्विरदास्य मयूरेश दुःस्वप्नहर पाहि माम्॥ ८ ॥ वक्रतुंड महाकाय सूर्यकोटिसमप्रभ। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ ९ ॥ गणनाथसरस्वतीरविशुक्रबृहस्पतीन्। पञ्चैतानि स्मरेन्नित्यं वेदवाणीप्रवृत्तये॥ १० ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान्। सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये॥ ११ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः॥ १२॥ अगजाननपद्मार्कं गजाननमहर्निशं। अनेकदं तं भक्तानामेकदंतमुपास्महे॥ १३ ॥ नमस्तस्मै गणेशाय यत्कंठः पुष्करायते। यदाभोगधनध्वान्तो नीलकण्ठस्य तांडवे॥ १४॥ कार्यं मे सिद्धिमायातु प्रसन्ने त्वयि धातरि॥ विघ्नानि नाशमायांतु सर्वाणि सुरनायक॥ १५ ॥ नमस्ते विघ्नसंहर्त्रे नमस्ते ईप्सितप्रद। नमस्ते देवदेवेश नमस्ते गणनायक॥ १६ ॥

इति प्रातःस्मरणम्।

# श्रीमहागणपत्यथर्वशीर्षम्।

॥ श्रीगणेशाय नमः ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः॥
स्थिरैरंगैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः॥ १॥
ॐ स्वस्ति नऽइंद्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः॥
स्वस्ति नस्ताक्ष्र्योऽअरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु॥२॥
ॐ तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारमवतु वक्तारम्।
ॐ शान्तिः शान्तिः शान्तिः।

अथ गणेश अथर्वशीर्षं व्याख्यास्यामः॥ ॐ नमस्ते गणपतये॥ त्वमेव प्रत्यक्षं तत्त्वमसि॥ त्वमेव केवलं कर्ताऽसि। त्वमेव केवलं धर्ताऽसि॥ त्वमेव केवलं हर्ताऽसि॥ त्वमेव सर्वं खल्विदं ब्रह्मासि॥ त्वं साक्षादात्माऽसि नित्यम्॥ १॥ ऋतं वच्मि॥ सत्यं वच्मि॥ २॥ अव त्वं माम्॥ अव वक्तारम्॥ अव श्रोतारम्॥ अव दातारम्॥ अव धातारम्॥ अवानूचानमव शिष्यम्॥ अव पश्चात्तात्॥ अव पुरस्तात्॥ अवोत्तरात्तात्॥ अव दक्षिणात्तात्॥ अव चोर्ध्वात्तात्॥ अवाधरात्तात्॥ सर्वतो मां पाहि पाहि समन्तात्॥ ३॥ त्वं वाङ्मयस्त्वं चिन्मयः॥ त्वमानन्दमयस्त्वं ब्रह्ममयः॥ त्वं सच्चिदानन्दाद्वितीयोऽसि॥ त्वं प्रत्यक्षं ब्रह्माऽसि॥ त्वं ज्ञानमयो विज्ञानमयोऽसि॥ ४॥ सर्वं जगदिदं त्वत्तो जायते॥ सर्वं जगदिदं त्वत्तस्तिष्ठति॥ सर्वं जगदिदं त्वयि लयमेष्यति॥ सर्वं जगदिदं त्वयि प्रत्येति॥ त्वं भूमिरापोऽनलोऽनिलो नभः॥ त्वं चत्वारि वाक्पदानि॥ ५॥ त्वं गुणत्रयातीतः॥ त्वं अवस्थात्रयातीतः॥ त्वं देहत्रयातीतः। त्वं कालत्रयातीतः॥ त्वं मूलाधारस्थितोऽसि नित्यम्॥ त्वं शक्तित्रयात्मकः॥ त्वां योगिनो ध्यायन्ति नित्यम्॥ त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम्॥ ६॥ गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम्॥ अनुस्वारः परतरः॥ अर्धेन्दुलसितम्॥ तारेण ऋद्धम् एतत्तव मनुस्वरूपम्॥ गकारः पूर्वरूपम्॥ अकारो मध्यमरूपम्॥ अनुस्वारश्चान्त्यरूपम्॥ बिन्दुरुत्तररूपम्॥ नादः सन्धानम्॥ संहिता सन्धिः॥ सैषा गणेशविद्या॥ गणक ऋषिः॥ निचृद्गायत्री छन्दः॥ गणपतिर्देवता॥ ॐ गँ गणपतये नमः॥ ७॥ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि॥ तन्नो दन्तिः

प्रचोदयात्॥ ८॥ एकदन्तं चतुर्हस्तं पाशमंकुशधारिणम्॥ रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम्॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्॥ रक्तगन्धानुलिप्तांगं रक्तपुष्पैः सुपूजितम्॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः॥ ९॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्तये नमः॥ १०॥ एतदथर्वशीर्षं योऽधीते॥ स ब्रह्मभूयाय कल्पते॥ स सर्वविघ्नैर्न बाध्यते॥ स सर्वतः सुखमेधते॥ स पञ्चमहापापात्प्रमुच्यते॥ सायमधीयानो दिवसकृतं पापं नाशयति॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति॥ सायम्प्रातः प्रयुञ्जानो अपापो भवति॥ सर्वत्राधीयानोऽपविघ्नो भवति॥ धर्मार्थकाममोक्षं च विन्दति॥ इदमथर्वशीर्षमशिष्याय न देयं॥ यो यदि मोहाद्दास्यति॥ स पापीयान् भवति॥ सहस्रावर्तनात्॥ यं यं काममधीते॥ तं तमनेन साधयेत्॥ ११॥ अनेन गणपतिमभिषिञ्चति॥ स वाग्मी भवती॥ चतुर्थ्यामनश्नन्जपति॥ स विद्यावान्भवति॥ इत्यथर्वणवाक्यम्॥ ब्रह्माद्यावरणं विद्यात्॥ न बिभेति कदाचनेति॥ १२॥ यो दूर्वांकुरैर्यजति॥ स वैश्रवणोपमो भवति॥ यो लाजैर्यजति॥ स यशोवान् भवति॥ स मेधावान्भवति॥ यो मोदकसहस्रेण यजति॥ स वाञ्छितफलमवाप्नोति॥ यः साज्यसमिद्भिर्यजति॥ स सर्वं लभते स सर्वं लभते॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति॥ सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा॥ सिद्धमन्त्रो भवति॥ महाविघ्नात्प्रमुच्यते॥ महादोषात्प्रमुच्यते॥ महापापत्प्रमुच्यते॥ स सर्वविद्भवति॥ स सर्वविद्भवति य एवं वेद॥ इत्युपनिषत्॥ १३॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः॥
स्थिरैरंगैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः॥ १॥
ॐ स्वस्ति नऽइंद्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः॥
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु॥२॥
ॐ तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारमवतु वक्तारम्।
सहनाववतु। सहनौ भुनक्तु। सहवीर्यं करवावहै।
तेजस्विनावधीतमस्तु। मा विद्विषावहै॥
ॐ शान्तिः शान्तिः शान्तिः।

# अथ श्रीगणेशकवचम्।

## (गणेशपुराणांतर्गत)

श्रीगणेशाय नमः। गौर्युवाच॥ एषोऽतिचपलो दैत्यान्बाल्येऽपि नाशयत्यहो। अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम॥ १॥ दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः। अतोऽस्य कण्ठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि॥ २॥ मुनिरुवाच॥ **अथ ध्यानम्** ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे। त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम्॥ द्वापारे तु गजाननं युगभुजं रक्तांगरागं विभुम्। तुर्ये तु द्विभुजं सितांगरुचिरं सर्वार्थदं सर्वदा॥ ३॥ **अथ कवचम्** विनायकः शिखां पातु परमात्मा परात्परः। अतिसुंदरकायस्तु मस्तकं सुमहोत्कटः॥ ४॥ ललाटं कश्यपः पातु भ्रूयुगं तु महोदरः। नयने भालचन्द्रस्तु गजास्यस्त्वोपल्लवौ॥ ५॥ जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः। वाचं विनायकः पातु दन्तान् रक्षतु विघ्नहा॥ ६॥ श्रवणौ पाशपाणिस्तु नासिकां चिंतितार्थदः। गणेशस्तु मुखं कंठं पातु देवो गणंजयः॥ ७॥ स्कंधौ पातु गजस्कंधः स्तनौ विघ्नविनाशनः। हृदयं गणनाथस्तु हेरंबो जठरं महान्॥ ८॥ धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः। लिंगं गुह्यं सदा पातु वक्रतुण्डो महाबलः॥ ९॥ गणक्रीडो जानुजंघे ऊरू मंगलमूर्तिमान्। एकदंतो महाबुद्धिः पादौ गुल्फौ सदाऽवतु॥ १०॥ क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः। अंगुलीश्च नखान्पातु पद्महस्तोऽरिनाशनः॥ ११॥ सर्वांगानि मयूरेशो विश्वव्यापी सदाऽवतु। अनुक्तमपि यत्स्थानं धूम्रकेतुः सदाऽवतु॥ १२॥ आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु। प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः॥ १३॥ दक्षिणस्यामुमापुत्रो नैर्ऋत्यां तु गणेश्वरः। प्रतीच्यां विघ्नहर्ताऽव्याद्वायव्यां गजकर्णकः॥ १४॥ कौबेर्यां निधिपः पायादीशान्यामीशनन्दनः। दिवाऽव्यादेकदन्तस्तु रात्रौ संध्यासु विघ्नहृत्॥ १५॥ राक्षसासुरवेतालग्रहभूतपिशाचतः। पाशांकुशधरः पातु रजःसत्त्वतमः स्मृतिः॥ १६॥ ज्ञानं धर्मं च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम्। वपुर्धनं च धान्यं च गृहान्दाराः सुतान् सखीन्॥ १७॥ सर्वायुधधरः पौत्रान् मयूरशोऽवतात्सदा। कपिलोऽजाविकं पातु गजाश्वान् विकटोऽवतु॥ १८॥ भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेत्सुधीः। न भयं जायते तस्य यक्षरक्षःपिशाचतः॥ १९॥ त्रिसंध्यं जपते यस्तु वज्रसारतनुर्भवेत्। यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत्॥ २०॥ युद्धकाले पठेद्यस्तु विजयं प्राप्नुयात् द्रुतम्। मारणोच्चाटनाकर्ष - स्तंभमोहनकर्मणि॥ २१॥ सप्तवारं जपेदेतद्दिनाना-

मेकविंशतिम्। तत्तत्फलमवाप्नोति साधको नात्र संशय:॥ २२॥ एकविंशतिवारं च पठेत्तावद्दिनानि य:। कारागृहगतं सद्यो राज्ञा वध्यं च मोचयेत्॥ २३॥ राजदर्शनवेलायां पठेदेतत्त्रिवारत:। स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत्॥ २४॥ इदं गणेशकवचं कश्यपेन समीरितम्। मुद्गलाय च तेनाथ मांडव्याय महर्षये॥ २५॥ मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम्। न देयं भक्तिहीनाय देयं श्रद्धावते शुभम्॥ २६॥ यस्यानेन कृता रक्षा न बाधाऽस्य भवेत्कचित्। राक्षसासुरवेतालदैत्य-दानवसंभवा॥ २७॥

**इति श्रीगणेशपुराणे गणेशकवचं संपूर्णम्।**

## अथ श्रीगणेशभुजंगप्रयातम्।

श्रीगणेशाय नम:। रणत्क्षुद्रघंटानिनादाभिरामं चलत्तांडवोद्दंडवत्पद्मतालम्। लसत्तुंदिलाङ्गोपरिव्यालहारं गणाधीशमीशानसूनुं तमीडे॥ १॥ ध्वनिध्वंसवीणालयोल्लासिवक्त्रं स्फुरच्छुंडदंडोल्लसद्बीजपूरम्। गलद्दर्पसौगंध्यलोलालिमालं गणाधीशमीशानसूनुं तमीडे॥ २॥ प्रकाशज्जपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्योतिरेकम्। प्रलम्बोदरं वक्रतुंडैकदंतं गणाधीशमीशानसूनुं तमीडे॥ ३॥ विचित्रस्फुरद्रत्नमाला-किरीटं किरीटोल्लसच्चन्द्ररेखाविभूषम्। विभूषैकभूषं भवध्वंसहेतुं गणाधीशमीशानसूनुं तमीडे॥ ४॥ उदञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलताविभ्रमभ्राजदक्षम्। मरुत्सुंदरी-चामरै: सेव्यमानं गणाधीशमीशानसूनुं तमीडे॥ ५॥ स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदारलीलावतारम्। कलाबिंदुगं गीयते योगिवर्यैर्गणाधीशमीशानसूनुं तमीडे॥ ६॥ यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम्। परं पारमोङ्कारमाम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे॥ ७॥ चिदानन्दसान्द्राय शांताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम्। नमोऽनन्तलीलाय कैवल्यभासे नमोविश्वबीज प्रसीदेशसूनो॥ ८॥ इमं सुस्तवं प्रातरुत्थाय भक्त्या पठेद्यस्तु मर्त्यो लभेत्सर्वकामान्। गणेशप्रसादेन सिद्ध्यंति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने॥ ९॥

**इति श्रीमत्-शङ्कराचार्यकृतं गणेशभुजंगप्रयातस्तोत्रं संपूर्णम्।**

# अथ शनैश्चरं विष्णुनोपदिष्टं संसारमोहनं गणेशकवचम्।

विष्णुरुवाच॥ संसारमोहनस्यास्य कवचस्य प्रजापतिः। ऋषिश्छंदश्च बृहती देवो लम्बोदरः स्वयम्॥ १॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः। सर्वेषां कवचानां च सारभूतमिदं मुने॥ २॥ ॐ गं हुं श्रीगणेशाय स्वाहा मे पातु मस्तकम्। द्वात्रिंशदक्षरो मन्त्रो ललाटं मे सदाऽवतु॥ ३॥ ॐ ह्रीं क्लीं श्रीं गमिति च संततं पातु लोचनम्। तालुकं पातु विघ्नेशः संततं धरणीतले॥ ४॥ ॐ ह्रीं श्रीं क्लीमिति च संततं पातु नसिकाम्। ॐ गौं गं शूर्पकर्णाय स्वाहा पात्वधरं मम॥ ५॥ दन्तानि तालुकां जिह्वां पातु मे षोडशाक्षरः॥ ६॥ ॐ लं श्रीं लम्बोदरायेति स्वाहा गण्डं सदाऽवतु। ॐ क्लीं ह्रीं विघ्ननाशाय स्वाहा कर्णं सदाऽवतु॥ ७॥ ॐ श्रीं गं गजाननायेति स्वाहा स्कंधं सदाऽवतु। ॐ ह्रीं विनायकायेति स्वाहा पृष्ठं सदाऽवतु॥ ८॥ ॐ क्लीं ह्रीमिति कंकालं पातु वक्षःस्थलं च गम्। करौ पादौ सदा पातु सर्वांगं विघ्ननिघ्नकृत्॥ ९॥ प्राच्यां लम्बोदरः पातु आग्नेय्यां विघ्ननायकः। दक्षिणो पातु विघ्नेशो नैर्ऋत्यां तु गजाननः॥ १०॥ पश्चिमे पार्वतीपुत्रो वायव्यां शंकरात्मजः। कृष्णस्यांशश्चोत्तरे च परिपूर्णतमस्य च॥ ११॥ ऐशान्यामेकदन्तश्च हेरम्बः पातु चोर्ध्वतः। अधो गणाधिपः पातु सर्वपूज्यश्च सर्वतः॥ १२॥ स्वप्ने जागरणे चैव पातु मां योगिनां गुरुः॥ १३॥ इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्। संसारमोहनं नाम कवचं परमाद्भुतम्॥ १४॥ श्रीकृष्णेन पुरा दत्तं गोलोके रासमण्डले। वृन्दावने विनीताय मह्यं दिनकरात्मज॥ १५॥ मया दत्तं च तुभ्यं च यस्मै कस्मै न दास्यसि। परं वरं सर्वपूज्यं सर्वतारणम्॥ १६॥ गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः। कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः॥ १७॥ अश्वमेधसहस्राणि वाजपेयशतानि च। ग्रहेन्द्रकवचस्यास्य कलां नार्हति षोडशीम्॥ १८॥ इदं कवचमज्ञात्वा यो भजेच्छंकरात्मजम्। शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः॥ १९॥

**इति श्रीब्रह्मवैवर्ते गणपतिखंडे, संसारमोहनं गणेशकवचं संपूर्णम्।**

# अथ श्रीगणेशमहिम्नः स्तोत्रम्।

श्रीगणेशाय नमः। अनिर्वाच्यं रूपं स्तवननिकरो यत्र गलित—। स्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्यात्र महतः॥ यतो जातं विश्वं स्थितमपि सदा यत्र विलयः। स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः॥ १॥ गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा। रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः॥ वदन्त्येकं शाक्ता जगदुदयमूलां परशिवाम्। न जाने किं तस्मै नम इति परं ब्रह्म सकलम्॥ २॥ तथेशं योगज्ञा गणपतिमिमं कर्म निखिलम्। समीमांसा वेदांतिन इति परं ब्रह्म सकलम्॥ अजां सांख्यो ब्रूते सकलगुणरूपां च सततं। प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति॥ ३॥ कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणि—। र्यथा धीर्यस्य स्यात्स च तदनुरूपो गणपतिः॥ महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवत्। ध्वनिर्ज्योतिर्बिन्दुर्गगनसदृशः किं च सदसत्॥ ४॥ अनेकास्योऽपाराक्षिकरचरणोऽनंतहृदयः। तथा नानारूपो विविधवदनः श्रीगणपतिः॥ अनंताह्वः शक्त्या विविधगुणकर्मैकसमये। त्वसंख्यातानंताभिमतफलदोऽनेकविषये॥ ५॥ न यस्यान्तो मध्यो न च भवति चादिः सुमहताम्। अलिप्तः कृत्वेत्थं सकलमपि 'खं' वत्स च पृथक्॥ स्मृतः संस्मर्तृणां सकलहृदयस्थः प्रियकरः। नमस्तस्मै देवाय सकलसुरवंद्याय महते॥ ६॥ गणेशाद्यं बीजं दहनवनितापल्लवयुतम्। मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदः॥ सबिंदुश्चांगाद्यां गणकऋषिछंदोऽस्य च निचृत्। स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम्॥ ७॥ गकारो हेरंबः सगुण इति पुंनिर्गुणमयो। द्विधाऽप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः॥ स चेशश्चोत्पत्तिस्थितिलयकरोऽयं प्रथमको। यतो भूतं भव्यं भवति पतिरीशो गणपतिः॥ ८॥ गकारः कंठोर्ध्वं गजमुखसमो मर्त्यसदृशो। णकारः कंठाधो जठरसदृशाकार इति च॥ अधोभागः कट्यां चरण इति हीशोऽस्य च तनुर्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवः सुवः॥ ९॥ गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं। सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम्॥ गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतम्। न विज्ञातो नाम्नः सकलमहिमा कीदृशविधः॥ १०॥ गणेशेत्याह्वां यः प्रवदति मुहुस्तस्य पुरतः। प्रपश्यंस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा॥ स्वरूपस्य ज्ञानं त्वमुक इति नाम्नाऽस्य भवति। प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना॥ ११॥ गणेशो विश्वेऽस्मिन्स्थित इह च विश्वं गणपतौ। गणेशो यत्रास्ते धृतिमति-रमैश्वर्यमखिलम्॥

समुक्तं नामैकं गणपतिपदं मंगलमयम्। तदेकास्यं दृष्टे सकलविबुधास्ये-क्षणसमम्॥ १२॥ बहुक्लेशैर्व्याप्तः स्मृत उत गणेशश्च हृदये। क्षणात्क्लेशान्मुक्तो भवति सहसा त्वभ्रचयवत्॥ वने विद्यारंभे युधि रिपुभये कुत्र गमने। प्रवेशे प्राणान्ते गणपतिपदं चाशु विशति॥ १३॥ गणाध्यक्षो ज्येष्ठः कपिल अपरो मंगलनिधिर्दयालुर्हेरंबो वरद इति चिंतामणिरजः। वरानीशो ढुंढिर्गजवदननामा शिवसुतो। मयूरेशो गौरीतनय इति नामानि पठति॥ १४॥ महेशोऽयं विष्णुः सकविरविरिन्दुः कमलजः। क्षितिस्तोयं वह्निःश्वसन इति खं त्वद्रिरुदधिः। कुजस्तारः शुक्रो पुरुरुडुबुधोऽगुश्च धनदो। यमः पाशी काव्यः शनिरखिलरूपो गणपतिः॥ १५॥ मुखं वह्निः पादौ हरिरपि विधाता प्रजननम्। रविर्नेत्रे चंद्रो हृदयमपि कामोऽस्य मदनः॥ करौ शक्रः कट्यामवनिरुदरं भाति दशनं। गणेशस्यासन्वै क्रतुमयवपुश्चैव सकलम्॥ १६॥ अनर्घ्यालंकारैररुणवसनैर्भूषिततनुः। करींद्रास्यः सिंहासनमुपगतो भाति बुधराट्॥ स्मितास्यात्तन्मध्येऽप्युदितरविबिंबोपमरुचिः। स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा॥ १७॥ समंतात्तस्यासन् प्रवरमुनिसिद्धाःसुरगणाः। प्रशंसंतीत्यग्रे विविधनुतिभिः साञ्जलिपुटाः॥ बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरैर्गण-क्रीडामोदप्रमदविकटाद्यैः सहचरैः॥ १८॥ वशित्वाद्यष्टाष्टादशदिगखिलाल्लोल-मनुवाग्धृतिः पादूः खड्गोंजनरसबलाः सिद्धय इमाः॥ सदा पृष्ठे तिष्ठंत्यनिमिषदृशस्तन्मुखलया गणेशं सेवन्तेऽप्यतिनिकटसूपायनकराः॥ १९॥ मृगाङ्कास्या रम्भाप्रभृतिगणिका यस्य पुरतः। सुसंगीतं कुर्वंत्यपि कुतुकगंधर्वसहिताः॥ मुदः पारो नात्रेत्यनुपमपदे दौर्विगलिता। स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम्॥ २०॥ हरेणायं ध्यातस्त्रिपुरमथने चासुरवधे। गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा॥ विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे। नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा॥ २१॥ अयं सुप्रासादे सुर इव निजानंदभुवने। महान् श्रीमानाद्यो लघुतरगृहे रंकसदृशः॥ शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे। स्थितो भूत्वोमाङ्के शिशुगणपतिर्लालनपरः॥ २२॥ अमुष्मिन्संतुष्टे गजवदन एवापि विबुधे। ततस्ते संतुष्टास्त्रिभुवनगताः स्युर्बुधगणाः॥ दयालुर्हेरंबो न च भवति यस्मिंश्च पुरुषे। वृथा सर्वं तस्य प्रजननमतः सांद्रतमसि॥ २३॥ वरेण्यो भ्रूशुंडिर्भृगुगुरुकुजा मुद्गलमुखा। ह्यपारास्तद्भक्ता जपहवनपूजास्तुतिपराः॥ गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं। विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः॥ २४॥ मृदः काश्चिद्धातोश्छदविलिखिता वापि दृषदः। स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन

सहसा॥ अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपते। श्रुता शुद्धो मर्त्यो भवति दुरिताद्विस्मय इति॥ २५॥ बहिर्द्वारस्योर्ध्वं गजवदनवर्ष्मेंधनमयं। प्रशस्तं वा कृत्वा विविधकुशलैस्तत्र निहतम्॥ प्रभावात्तन्मूर्त्या भवति सदनं मंगलमयम्। विलोक्यानंदस्तां भवति जगतो विस्मय इव॥ २६॥ सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये। मृदो मूर्तिं कृत्वा गणपतितिथौ ढुंढिसदृशीम्॥ समर्चंन्नुत्साहः प्रभवति महान् सर्वसदने। विलोक्यानंदस्तां प्रभवति नृणां विस्मय इव॥ २७॥ तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः। कथं स श्लोकेऽस्मिन् स्तुत इति भवेत्संप्रपठिते॥ स्मृतं नामास्यैकं सकृदिदमनंताह्वयसमं। यतो यस्यैकस्य स्तवनसदृशं नान्यदपरम्॥ २८॥ गजवदन विभो यद्वर्णितं वैभवं ते। त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु॥ त्वमसि च करुणायाः सागरः कृत्स्नदाताप्यति तव भृतकोऽहं सर्वदा चिंतकोऽस्मि॥ २९॥ सुस्तोत्रं प्रपठतु नित्यमेतदेवम्। स्वानंदं प्रति गमनेऽप्ययं सुमार्गः॥ संचिन्त्यं स्वमनसि तत्पदारविन्दम्। स्थाप्याग्रे स्तवनफलं नतीः करिष्ये॥ ३०॥ गणेशदेवस्य माहात्म्यमेतद् यःश्रावयेद्वापि पठेच्च तस्य। क्लेशा लयं यान्ति लभेच्च शीघ्रं स्त्रीपुत्रविद्यार्थगृहं च मुक्तिम्॥ ३१॥

इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नःस्तोत्रं संपूर्णम्।

## अथ संकष्टनाशनगणेशस्तोत्रम्।

श्रीगणेशाय नमः। नारद उवाच। प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्। भक्तावासं स्मरेन्नित्यमायुः कामार्थसिद्धये॥ १॥ प्रथमं वक्रतुण्डं च एकदंतं द्वितीयकम्। तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम्॥ २॥ लम्बोदरं पंचमं च षष्ठं विकटमेव च। सप्तमं विघ्नराजेंद्रं धूम्रवर्णं तथाष्टकम्॥ ३॥ नवमं भालचन्द्रं च दशमं तु विनायकम्। एकादशं गणपतिं द्वादशं तु गजाननम्॥ ४॥ द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः। न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभोः॥ ५॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम्। पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम्॥ ६॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्। संवत्सरेण सिद्धिं च लभते नात्र संशयः॥ ७॥ अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्। तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः॥ ८॥

इति श्रीनारदपुराणे संकष्टनाशनं गणेशस्तोत्रं संपूर्णम्॥

# ऋणमोचनमहागणपतिस्तोत्रम्।

श्रीगणेशायनमः॥ ॐ अस्य श्रीऋणमोचनमहागणपतिस्तोत्रमंत्रस्य भगवान् शुक्राचार्यऋषिः ऋणमोचनगणपतिर्देवता ऋणमोचनार्थे जपे विनियोगः॥ ॐ स्मरामि देवदेवेशं वक्रतुण्डं महाबलं॥ महाविघ्नहरं सौम्यं नमामि ऋणमुक्तये॥ १॥
महागणपतिं देवं महासत्त्वं महाबलं॥ महाविघ्नहरं सौम्यं नमामि ऋणमुक्तये॥ २॥
एकाक्षरं एकदंतं एकब्रह्मसनातनं॥ एकमेवारद्वितीयं च नमामि ऋणमुक्तये॥ ३॥
शुक्लांबरं शुक्लवर्णं शुक्लगंधानुलेपनं॥ सर्वशुक्लमयं देवं नमामि ऋणमुक्तये॥ ४॥
रक्तांबरं रक्तवर्णं रक्तगंधानुलेपनं॥ रक्तपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ ५॥
कृष्णांबरं कृष्णवर्णं कृष्णगंधानुलेपनं॥ कृष्णपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ ६॥
पीतांबरं पीतवर्णं पीतगंधानुलेपनं॥ पीतपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ ७॥
नीलांबरं नीलवर्णं नीलगंधानुलेपनं॥ नीलपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ ८॥
धूम्रांबरं धूम्रवर्णं धूम्रगंधानुलेपनं॥ धूम्रपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ ९॥
सर्वांबरं सर्ववर्णं सर्वगंधानुलेपनं॥ सर्वपुष्पैः पूज्यमानं नमामि ऋणमुक्तये॥ १०॥
भद्रजातं च रूपं च पाशांकुशधरं शुभं॥ सर्वविघ्नहरं देवं नमामि ऋणमुक्तये॥ ११॥
यः पठेत् ऋणहरस्तोत्रं प्रातःकाले शुचिर्नरः॥ षण्मासाभ्यंतरे चैव ऋणच्छेदो भविष्यति॥ १२॥

इति श्रीब्रह्मांडपुराणे ऋणमोचनमहागणपतिस्तोत्रं संपूर्णम्।

# श्रीसन्तानगणपतिस्तोत्रम्।

नमोऽस्तु गणनाथाय सिद्धिबुद्धियुताय च॥ सर्वप्रदाय देवाय पुत्रवृद्धिप्रदाय च॥ १॥
गुरूदराय गुरवे गोप्त्रे गुह्यसिताय ते॥ गोप्याय नोदिताशेषभुवनाय चिदात्मने॥ २॥
विश्वमूलाय भव्याय विश्वसृष्टिकराय ते॥ नमो नमस्ते सत्याय सत्यपूर्णाय शुण्डिने॥ ३॥
एकदंताय शुद्धाय सुमुखाय नमो नमः॥ प्रपन्नजनपालाय प्रकृतार्तिविनाशिने॥ ४॥
शरणं भव देवेश सन्ततिं सुदृढां कुरु॥ भविष्यन्ति च ये पुत्रा मत्कुले गणनायक॥ ५॥
ते सर्वे तव पूजार्थे निरताः स्युर्वरो मतः॥ पुत्रप्रदमिदं स्तोत्रं सर्वसिद्धिप्रदायकम्॥ ६॥

इति सन्तानगणपतिस्तोत्रं संपूर्णम्।

# अथ ऋषिप्रणीतो गणपतिस्तवः।

श्रीगणेशाय नमः। ऋषिरुवाच। अजं निर्विकल्पं निराकारमेकं। निरानन्दमानन्दमद्वैतपूर्णम्॥ परं निर्गुणं निर्विशेषं निरीहम्। परब्रह्मरूपं गणेशं भजेम॥ १॥ गुणातीतमानं चिदानन्दरूपं। चिदाभासकं सर्वगं ज्ञानगम्यम्॥ मुनिध्येयमाकाशरूपं परेशम्। परब्रह्मरूपं गणेशं भजेम॥ २॥ जगत्कारणं कारणज्ञानरूपम्। सुरादिं सुखादिं गणेशं गुणेशम्॥ जगद्व्यापिनं विश्ववंद्यं सुरेशम्। परब्रह्मरूपं गणेशं भजेम॥ ३॥ रजोयोगतो ब्रह्मरूपं श्रुतिज्ञम्। सदा कार्यसक्तं हृदाऽचिन्त्यरूपम्॥ जगत्कारणं सर्वविद्यानिदानम्। परब्रह्मरूपं गणेशं नताः स्मः॥ ४॥ सदा सत्ययोग्यं मुदा क्रीडमानं। सुरारीन् हरन्तम् जगत्पालयन्तम्॥ अनेकावतारं निजज्ञानहारम्। सदा विश्वरूपं गणेशं नमामः॥ ५॥ तमोयोगिनं रुद्ररूपं त्रिनेत्रम्। जगद्धारकं तारकं ज्ञानहेतुम्॥ अनेकागमैः स्वं जनं बोधयन्तम्। सदा सर्वरूपं गणेशं नमामः॥ ६॥ नमः स्तोमहारं जनाज्ञानहारम्। त्रयीवेदसारं परब्रह्मसारम्। मुनिज्ञानकारं विदूरे विकारम्। सदा ब्रह्मरूपं गणेशं नमामः॥ ७॥ निजैरोषधीस्तर्पयन्तं कराद्यैः। सुरौघान्कलाभिः सुधास्राविणीभिः। दिनेशांशुसंतापहारं द्विजेशम्। शशांकस्वरूपं गणेशं नमामः॥ ८॥ प्रकाशस्वरूपं नमो वायुरूपम्। विकारादिहेतुं कलाभारभूतम्॥ अनेकक्रियानेकशक्तिस्वरूपम्। सदा शक्तिरूपं गणेशं नमामः॥ ९॥ प्रधानस्वरूपं महत्तत्त्वरूपम्। धराचारिरूपम् दिगीशादिरूपम्॥ असत्सत्स्वरूपं जगद्धेतुरूपम्। सदा विश्वरूपं गणेशं नताः स्मः॥ १०॥ त्वदीये मनः स्थापयेदंघ्रियुग्मे। जनो विघ्नसंघातपीडां लभेत॥ लसत्सूर्यबिम्बे विशाले स्थितोऽयम्। जनो ध्वान्तपीडां कथं वा लभेत॥ ११॥ वयं भ्रामिताः सर्वथाऽज्ञानयोगादलब्धस्तवांघ्रिं बहून्वर्षपूगान्॥ इदानीमवाप्तास्तवैव प्रसादात्। प्रपन्नान्सदा पाहि विश्वंभराद्य॥ १२॥ एवं स्तुतो गणेशस्तु संतुष्टोऽभून्महामुने। कृपया परयोपेतोऽभिधातुमुपचक्रमे॥ १३॥

**इति ऋषिप्रणीतो गणपतिस्तवः संपूर्णः।**

# अथ विष्णुकृतं गणेशस्तोत्रम्।

नारायण उवाच॥ अथ विष्णुः सभामध्ये संपूज्य तं गणेश्वरम्। तुष्टाव परया
भक्त्या सर्वविघ्नविनाशकम्॥१॥ श्रीविष्णुरुवाच॥ ईश त्वां स्तोतुमिच्छामि
ब्रह्मज्योतिम् सनातनम्। निरूपितुमशक्तोऽहमनुरूपमनीहकम्॥ २॥ प्रवरं सर्व देवानां
सिद्धानां योगिनां गुरुम्। सर्वस्वरूपं सर्वेशं ज्ञानराशिस्वरूपिणम्॥ ३॥ अव्यक्तमक्षरं
नित्यं सत्यमात्मस्वरूपिणम्। वायुतुल्यातिनिर्लिप्तं चाक्षतं सर्वसाक्षिणम्॥ ४॥
संसारार्णवपारे च मायापोते सुदुर्लभे। कर्णधारस्वरूपं च भक्तानुग्रहकारकम्॥ ५॥
वरं वरेण्यं वरदं वरदानामपीश्वरम्। सिद्धं सिद्धिस्वरूपं च सिद्धिदं सिद्धिसाधनम्॥ ६॥
ध्यानातिरिक्तं ध्येयं च ध्यानासाध्यं च धार्मिकम्। धर्मस्वरूपं धर्मज्ञं
धर्माधर्मफलप्रदम्॥ ७॥ बीजं संसारवृक्षाणामंकुरं च तदाश्रयम्। स्त्रीपुंन्नपुंसकानां
च रूपमेतदतीन्द्रियम्॥ ८॥ सर्वाद्यमग्रपूज्यं च सर्वपूज्यं गुणार्णवम्। स्वेच्छया सगुणं
ब्रह्म निर्गुणं चापि स्वेच्छया॥ ९॥ स्वयं प्रकृतिरूपं च प्राकृतं प्रकृतेः परम्।
त्वां स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च॥ १०॥ न क्षमश्च पंचवक्त्रश्च न क्षमश्चतुराननः।
सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ। न शक्ताश्च चतुर्वेदा के वा ते
वेदवादिनः॥ ११॥ नारायण उवाच। इत्येवं स्तवनं कृत्वा सुरेशं सुरसंसदि। सुरेशश्च
सुरैः सार्द्धं विरराम रमापतिः॥ १२॥ इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत्।
सायंप्रातश्च मध्याह्ने भक्तियुक्तः समाहितः॥ १३॥ तद्विघ्ननिघ्नं कुरुते विघ्नेशः
सततं मुने। वर्धते सर्वकल्याणं कल्याणजनकः सदा॥ १४॥ यात्राकाले पठित्वा
तु यो याति भक्तिपूर्वकम्। तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः॥ १५॥ तेन
दृष्टं न दुःस्वप्नं सुस्वप्नमुपजायते। कदापि न भवेत्तस्य ग्रहपीडा च दारुणा॥ १६॥
भवेद्विनाशः शत्रूणां बन्धूनां च विवर्धनम्। शश्वद्विघ्नविनाशश्च शश्वत्
संपद्विवर्धनम्॥ १७॥ स्थिरा भवेद् गृहे लक्ष्मीः पुत्रपौत्रविवर्धिनी। सर्वैश्वर्यमिह प्राप्य
ह्यन्ते विष्णुपदं लभेत्॥ १८॥ फलं चापि च तीर्थानां यज्ञानां यद्भवेद् ध्रुवम्।
महतां सर्वदानानां श्रीगणेशस्य प्रसादतः॥ १९॥

इति श्रीब्रह्मवैवर्ते श्रीविष्णुकृतं गणेशस्तोत्रं संपूर्णम्। (गणपतिखण्डे)

## अथ श्रीगणेशपञ्चरत्नस्तोत्रम्।

श्रीगणेशाय नमः। मुदा करात्तमोदकं सदा विमुक्तिसाधकम्। कलाधरावतंसकं विलासिलोकरञ्जकम्। अनायकैकनायकं विनाशितेभदैत्यकम्। नताशुभाशुनाशकं नमामि तं विनायकम्॥ १॥ नतेतरातिभीकरं नवोदितार्कभास्वरम्। नमत्सुरारिनिर्जरं नताधिकापदुद्धरम्॥ सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरम्। महेश्वरं तमाश्रये परात्परं निरंतरम्॥ २॥ समस्तलोकशंकरम् निरस्तदैत्यकुंजरम्। दरेतरोदरं वरं वरेभवक्त्रमक्षरम्॥ कृपाकरं क्षमाकरं मुदाकरं यशस्करम्। मनस्करं नमस्कृतां समस्करोमि भास्वरम्॥ ३॥ अकिंचनार्तिमार्जनं चिरंतनोक्तिभाजनं। पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम्॥ प्रपञ्चनाशभीषणं धनं जयादिभूषणम्। कपोलदानवारणं भजे पुराणवारणम्॥ ४॥ नितांत-कान्त-दन्त-कान्तिमन्तकान्तकात्मजम्। अचिंत्य-रूपमन्तहीनमन्तरायकृन्तनम्॥ हृदन्तरे निरन्तरं वसंतमेव योगिनाम्। तमेकदन्तमेव तं विचिन्तयामि संततम्॥ ५॥ महागणेशपञ्चरत्नमादरेण योऽन्वहम्। प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम्॥ अरोगतामदोषतां सुसाहितीं सुपुत्रताम्। समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात्॥ ६॥

**इति श्रीगणेशपञ्चरत्नस्तोत्रं संपूर्णम्।**

## अथ विष्णूपदिष्टं गणेशनामाष्टकं स्तोत्रम्।

**विष्णुरुवाच।**

गणेशमेकदन्तं च हेरम्बं विघ्ननायकम्। लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम्॥ १॥ नामाष्टार्थं च पुत्रस्य श्रुणु मातर्हरप्रिये। स्तोत्राणां सारभूतं च सर्वविघ्नहरं परम्॥ २॥ ज्ञानार्थवाचको गश्च णश्च निर्वाणवाचकः। तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम्॥ ३॥ एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः। बलं प्रधानं सर्वस्मादेकदन्तं नमाम्यहम्॥ ४॥ दीनार्थवाचको हेश्च रम्बः पालकवाचकः। दीनानां परिपालकं हेरम्बं प्रणमाम्यहम्॥ ५॥ विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः। विपत्खंडनकारकं नमामि विघ्ननायकम्॥ ६॥ विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बोदरं पुरा। पित्रा दत्तैश्च विविधैर्वन्दे लम्बोदरं च तम्॥ ७॥ शूर्पाकारौ च यत्कर्णौ विघ्नवारणकारणौ। संपदौ ज्ञानरूपौ च शूर्पकर्णं नमाम्यहम्॥ ८॥ विष्णुप्रसादपुष्पं च यन्मूर्ध्नि मुनिदत्तकम्। तं गजेन्द्रवक्त्रयुक्तं गजवक्त्रं नमाम्यहम्॥ ९॥

गुहस्याग्रे च जातोऽयमाविर्भूतो हरालये। वंदे गुहाग्रजं देवं सर्वदेवाग्रपूजितम्॥ १०॥ एतन्नामाष्टकं दुर्गे नामभिः संयुतं परम्। पुत्रस्य पश्य वेदे च तदा कोपं तथा कुरु॥ ११॥ एतन्नामाष्टकं स्तोत्रं नानार्थसंयुतं शुभम्। त्रिसंध्यं यः पठेन्नित्यं स सुखी सर्वतो जयी॥ १२॥ ततो विघ्नाः पलायन्ते वैनतेयाद् यथोरगाः। गणेश्वरप्रसादेन महाज्ञानी भवेद् ध्रुवम्॥ १३॥ पुत्रार्थी लभते पुत्रं भार्यार्थी विपुलां स्त्रियम्। महाजडः कवीन्द्रश्च विद्यावांश्च भवेद् ध्रुवम्॥ १४॥

**इति श्रीब्रह्मवैवर्ते गणपतिखंडे विष्णूपदिष्टं गणेशनामाष्टकं स्तोत्रं संपूर्णम्।**

## श्रीगणेशाष्टकम्।

श्रीगणेशाय नमः॥ सर्वे ऊचुः। यतोऽनंतशक्तेरनंताश्च जीव यतो निर्गुणादप्रमेया गुणास्ते। यतो भाति सर्वं त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः॥ १॥ यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता। तथेंद्रादयो देवसंघा मनुष्याः सदा तं गणेशं नमामो भजामः॥ २॥ यतो वह्निभानू भवो भूर्जलं च यतः सागराश्चंद्रमा व्योम वायुः। यतः स्थावरा जंगमा वृक्षसंघाः सदा तं गणेशं नमामो भजामः॥ ३॥ यतो दानवाः किन्नरा यक्षसंघाः यतश्चारणा वारणाः श्वापदाश्च। यतः पक्षिकीटा यतो वीरुधश्च सदा तं गणेशं नमामं भजामः॥ ४॥ यतो बुद्धिरज्ञाननाशो मुमुक्षोर्यतः संपदो भक्तसंतोषिकाः स्युः। यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः॥ ५॥ यतः पुत्रसंपद्यतो वांछितार्थो यतोऽभक्तविघ्नस्तथाऽनेकरूपाः। यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः॥ ६॥ यतोऽनंतशक्तिः स शेषो बभूव धराधारणेऽनेकरूपे च शक्ताः। यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः॥ ७॥ यतो वेदवाचो विकुंठा मनोभिः सदा नेति नेतीति यत्तो गृणन्ति। परब्रह्मरूपं चिदानंदभूतं सदा तं गणेशं नमामो भजामः॥ ८॥ श्रीगणेश उवाच॥ पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः। त्रिसन्ध्यं त्रिदिनं तस्य सर्वकार्यं भविष्यति॥ ९॥ यो जपेदष्टदिवसं श्लोकाष्टकमिदं शुभम्। अष्टवारं चतुर्थ्यां तु सोऽष्टसिद्धीरवाप्नुयात्॥ १०॥ यः पठेन्मासमात्रं तु दशवारं दिने दिने। स मोचयेद्बन्धगतं राजवध्यं न संशयः॥ ११॥ विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमाप्नुयात्। वांछितांल्लभते सर्वानेकविंशतिवारतः॥ १२॥ यो जपेत्परया भक्त्या गजाननपरो नरः। एवमुक्त्वा ततो देवश्चांतर्धानं गतः प्रभुः॥

**इति श्रीगणेशपुराणे उपासनाखंडे श्रीगणेशाष्टकं संपूर्णम्।**

# अथ गणेशद्वादशनामस्तोत्रम्।

श्रीगणेशाय नमः॥ शुक्लांम्बरधरं देवं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये॥ १॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः॥ २॥ गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः। प्रसन्नो भव मे नित्यं वरदातर्विनायक॥ ३॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ ४॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः। द्वादशैतानि नामानि गणेशस्य यः पठेत्॥ ५॥ विद्यार्थी लभते विद्यां धनार्थी विपुलं धनम्। इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम्॥ ६॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥ ७॥

**इति मुद्गलोक्तं श्रीगणेशद्वादशनामस्तोत्रम् संपूर्णम्।**

# श्रीगणेश—एकविंशतिनामस्तोत्रम्।

गणेशं एकदंतं च चिंतामणिं विनायकम्। ढुंढिराजं मयूरेशं लंबोदरं गजाननम्॥ १॥ हेरंबं वक्रतुंडं च ज्येष्ठराजं निजस्थितम्। आशापूरं तु वरदं विकटं धरणीधरम्॥ २॥ सिद्धिबुद्धिपतिं वंदे ब्रह्मणस्पतिसंज्ञितम्। मांगल्येशं सर्वपूज्यं विघ्नानां नायकं परम्॥ ३॥ एकविंशतिनामानि गणेशस्य महात्मनः॥ ४॥ जपकाले पठेद्यस्तु यात्राकाले विशेषतः। विघ्नानि तस्य नश्यन्ति सर्वत्र विजयी भवेत्॥ ५॥

**इति श्रीगणेश-एकविंशतिनामस्तोत्रं संपूर्णम्।**

# श्रीगणेश-मंत्राः।

ॐ श्रीगणेशाय नमः। ॐ ऱ्हीं ग्रीं ऱ्हीं गणपतये नमः।

ॐ वक्रतुण्डाय हुं। ॐ गं गणपतये नमः।

ॐ नमो भगवते गजाननाय। श्रीगजानन जय गजानन!

श्रीगजानन जय गजानन जयजय गजानन!

ॐ ऱ्हीं गं हस्तिपिशाचि लिखे स्वाहा।

ॐ एकदंताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्।

ॐ नमो सिद्धिविनायकाय सर्वकार्यकर्त्रे सर्वविघ्नप्रशमनाय सर्वराज्यवशकरणाय सर्वजनसर्वस्त्रीपुरुषाकर्षणाय श्रीं ॐ स्वाहा।

# श्रीगणेश-अष्टोत्तरशतनामावलिः।

१ विघ्नेशाय नमः। २ विश्ववरदाय० ३ विश्वचक्षुषे० ४ जगत्प्रभवे०
५ हिरण्यरूपाय० ६ सर्वात्मने० ७ ज्ञानरूपाय० ८ जगन्मयाय० ९ ऊर्ध्वरेतसे०
१० महाबाहवे० ११ अमेयाय० १२ अमितविक्रमाय० १३ वेदवेद्याय०
१४ महाकालाय० १५ विद्यानिधये० १६ अनामयाय० १७ सर्वज्ञाय० १८ सर्वगाय०
१९ शांताय० २० गजास्याय० २१ चित्तेश्वराय० २२ विगतज्वराय० २३ विश्वमूर्तये०
२४ अमेयात्मने० २५ विश्वाधाराय० २६ सनातनाय० २७ सामगाय० २८ प्रियाय०
२९ मंत्रिणे० ३० सत्त्वाधाराय० ३१ सुराधीशाय० ३२ समस्तसाक्षिणे० ३३ निर्द्वंद्वाय०
३४ निर्लोकाय० ३५ अमोघविक्रमाय० ३६ निर्मलाय० ३७ पुण्याय० ३८ कामदाय०
३९ कांतिदाय० ४० कामरूपिणे० ४१ कामपोषिणे० ४२ कमलाक्षाय०
४३ गजाननाय० ४४ सुमुखाय० ४५ शर्मदाय० ४६ मूषकाधिपवाहनाय० ४७ शुद्धाय०
४८ दीर्घतुण्डाय० ४९ श्रीपतये० ५० अनंताय० ५१ मोहवर्जिताय० ५२ वक्रतुण्डाय०
५३ शूर्पकर्णाय० ५४ परमाय० ५५ योगीशाय० ५६ योगधाम्ने० ५७ उमासुताय०
५८ आपद्धंत्रे० ५९ एकदंताय० ६० महाग्रीवाय० ६१ शरण्याय० ६२ सिद्धसेनाय०
६३ सिद्धवेदाय० ६४ करुणाय० ६५ सिद्धये० ६६ भगवते० ६७ अव्यग्राय०
६८ विकटाय० ६९ कपिलाय० ७० ढुंढिराजाय० ७१ उग्राय० ७२ भीमोदराय०
७३ शुभाय० ७४ गणाध्यक्षाय० ७५ गणेशाय० ७६ गणाराध्याय० ७७ गणनायकाय०
७८ ज्योतिःस्वरूपाय० ७९ भूतात्मने० ८० धूम्रकेतवे० ८१ अनुकूलाय०
८२ कुमारगुरवे० ८३ आमंदाय० ८४ हेरंबाय० ८५ वेदस्तुताय० ८६ नागयज्ञोपवीतिने०
८७ दुर्धर्षाय० ८८ बालदूर्वांकुरप्रियाय० ८९ भालचंद्राय० ९० विश्वधात्रे०
९१ शिवपुत्राय० ९२ विनायकाय० ९३ लीलासेविताय० ९४ पूर्णाय०
९५ परमसुंदराय० ९६ विघ्नान्तकाय० ९७ सिंदूरवदनाय० ९८ नित्याय० ९९ विभवे०
१०० प्रथमपूजिताय० १०१ दिव्यपादाब्जाय० १०२ भक्तमंदाराय० १०३ शूरमहाय०
१०४ रत्नसिंहासनाय० १०५ मणिकुंडलमंडिताय० १०६ भक्तकल्याणाय०
१०७ अमेयाय० १०८ कल्याणगुरवे १०९ सहस्रशीर्ष्णे० ११० महागणपतये नमः॥

# अथ गणेश-अष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः। यम उवाच। गणेश हेरंब गजाननेति महोदर स्वानुभवप्रकाशिन्। वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत प्रभीताः॥ १॥ अनेकविघ्नांतक वक्रतुण्ड स्वसंज्ञवासिंश्च चतुर्भुजेति। कवीश देवांतकनाशकारिन् वदंतमेवं त्यजत प्रभीताः॥ २॥ महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र। परेश पृथ्वीधर एकदंत वदंतमेवं त्यजत प्रभीताः॥ ३॥ प्रमोद मोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण ढुंढे। द्वंद्वारिसिन्धो स्थिरभावकारिन् वदंतमेवं त्यजत प्रभीताः॥ ४॥ विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र। अनादिपूज्याऽऽखुग सर्वपूज्य वदंतमेवं त्यजत प्रभीताः॥ ५॥ वैरिञ्च्य लंबोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन्। सुरासुरैः सेवितपादपद्म वदंतमेवं त्यजत प्रभीताः॥ ६॥ वरिन्महाखुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनंतवाह। दितौज विघ्नेश्वर शेषनाथ वदंतमेवं त्यजत प्रभीताः॥ ७॥ अणोरणीयो महतो महीयो रवेर्ज योगेशज ज्येष्ठराज। निधीश मंत्रेश च शेषपुत्र वदंतमेवं त्यजत प्रभीताः॥ ८॥ वरप्रदातरदितेश्च सूनो परात्परज्ञानद तारवक्त्र। गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंतमेवं त्यजत प्रभीताः॥ ९॥ सिन्धोश्च शत्रो परशुप्रपाणे शमीशपुष्पप्रिय विघ्नहारिन्। दूर्वांकुरैरर्चित देवदेव वदंतमेवं त्यजत प्रभीताः॥ १०॥ धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः। अमेयमायामितविक्रमेति वदंतमेवं त्यजत प्रभीताः॥ ११॥ द्विधाचतुर्थीप्रिय कश्यपाश्च धनप्रद ज्ञानपदप्रकाश। चिन्तामणे चित्तविहारकारिन् वदंतमेवं त्यजत प्रभीताः॥ १२॥ यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो। विदेह स्वानंद अयोगयोग वदंतमेवं त्यजत प्रभीताः॥ १३॥ गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचंद्र। अनादिमध्यांतमयप्रचारिन् वदंतमेवं त्यजत प्रभीताः॥ १४॥ विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोध। कर्तुश्च पातुश्च तु संहरेति वदंतमेवं त्यजत प्रभीताः॥ १५॥ इदमष्टोत्तरशतं नाम्नां तस्य पठंति ये। शृण्वंति तेषु वै भीताः कुरुध्वं मा प्रवेशनम्॥ १६॥ भुक्तिमुक्तिप्रदं ढुंढेर्धनधान्यप्रवर्धनम्। ब्रह्मभूतकरं स्तोत्रं जपंतं नित्यमादरात्॥ १७॥ यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः। धामानि तत्र संभीताः कुरुध्वं मा प्रवेशनम्॥ १८॥

**इति श्रीमदान्त्ये मौद्गल्यपुराणे यमेन निजदूतान्प्रत्युपदिष्टम्**
**गणेश-अष्टोत्तरनामस्तोत्रं संपूर्णम्।**

# गणेशस्तोत्रम्।

राधिकोवाच। परं धाम परं ब्रह्म परेशं परमीश्वरम्। विघ्ननिघ्नकरं शान्तं पुष्टं कान्तमनन्तकम्॥ १॥ सुरासुरेन्द्रैः सिद्धेन्द्रै स्तुतं स्तौमि परात्परम्। सुरपद्मदिनेशं च गणेशं मङ्गलायनम्॥ २॥ इदं स्तोत्रं महापुण्यं विघ्नशोकहरं परम्। य पठेत् प्रातरुत्थाय सर्वविघ्नात् प्रमुच्यते॥ ३॥

**इति श्रीब्रह्मवैवर्ते राधाकृतं गणेशस्तोत्रं सम्पूर्णम्।**

# सायंप्रार्थना।

विघ्नेश्वराय वरदाय सुरप्रियाय। लंबोदराय सकलाय जगद्धिताय॥ नागाननाय श्रुतियज्ञविभूषिताय। गौरीसुताय गणनाथ नमो नमस्ते॥ १॥ भक्तार्तिनाशनपराय गणेश्वराय। सर्वेश्वराय शुभदाय सुरेश्वराय॥ विद्याधराय विकटाय च वामनाय। भक्तप्रसन्न वरदाय नमो नमस्ते॥ २॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः। नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥ ३॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे। भक्तप्रियाय देवाय नमस्तुभ्यं विनायक॥ ४॥ त्वां विघ्नशत्रुदलनेति च सुंदरेति। भक्तिप्रदेति सुखदेति फलप्रदेति॥ विद्याप्रदेत्यघहरेति च ये स्तुवन्ति। तेभ्यो गणेश वरदो भव नित्यमेव॥ ५॥

# श्रीगणेशमानसपूजा।

नानारत्नविचित्रकं रमणिकं सिंहासनं कल्पितम्॥ स्नानं जान्हविवारिणा गणपते पीतांबरं गृह्यताम्॥ कंठे मौक्तिकमालिका श्रुतियुगे द्वे धारिते कुंडले॥ नानारत्नविराजितो रविविभायुक्तः किरीटः शिरे॥ १॥ भाले चर्चितकेशरं मृगमदामोदांकितं चंदनम्॥ नानावृक्षसमुद्गतं सुकुसुमं मंदारदूर्वाशमीः॥ गुग्गुल्लोद्भवधूपकं विरचितं दीपं त्वदग्रे स्थितम्॥ भक्ष्यं मोदकसंयुतं गणपते क्षीरोदनं गृह्यताम्॥ २॥ तांबूलं मनसा मया विरचितं जंबूफलं दक्षिणाम्। साष्टांगं प्रणतोऽस्मि ते मम कृतां पूजा गृहाण प्रभो॥ मे कामः सततं तवार्चनविधौ बुद्धिस्तवालिंगने॥ स्वेच्छा ते मुखदर्शने गणपते भक्तिस्तु पादांबुजे॥ ३॥ माता गणेशश्च पिता गणेशो। भ्राता गणेशश्च सखा गणेशः॥ विद्या गणेशो द्रविणं गणेशः। स्वामी गणेशः शरणं गणेशः॥ ४॥ इतो गणेशः परतो गणेशः। यतो यतो यामि ततो गणेशः॥ गणेशदेवादपरं न किंचित्। तस्मात् गणेशं शरणं प्रपद्ये॥ ५॥

# अथ मन्त्रगर्भं गणपतिस्तोत्रम्।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| **वा** | रणास्यो | **द** | रघ्न्योर्थ | **ए** | कदं | **त** | शिवात्मजः । |
| **सु** | शर्म कृ | **त्ता** | रणोच्च्यं | **क** | विस्त | **त्पु** | रुषप्रियः ॥ १ ॥ |
| **दे** | वः पवि | **त्रे** | क्षणोर्द्यो | **दं** | मीचा | **रु** | स्त्रिलोचनः । |
| **वा** | ग्मा शामा | **या** | तीतात्मा | **ता** | पशो | **षा** | स्त्र्य आखुगः ॥ २ ॥ |
| **नं** | दी वंद्यो | **य** | मीशानो | **य** | शस्वी | **य** | श आस्पदः । |
| **द** | र्शनीयो | **वि** | घ्नराजो | **वि** | घ्नहा | **वि** | घ्नकृद्विराट् ॥ ३ ॥ |
| **स** | भ्यो हृत्प | **द्म** | निलयो | **द्म** | रस | **द्म** | विहापकः । |
| **र** | क्तांगोर्को | **हे** | ममाली | **हे** | रंबो | **हे** | मदंष्ट्रकः ॥ ४ ॥ |
| **स्व** | राट्प्रभा | **अ** | जोऽनंतो | **व** | रेण्यो | **म** | तिमान्गुणी । |
| **ती** | र्थ कीर्तिर् | **व** | रकरः | **क्र** | त्वीशो | **हा** | पितासुरः ॥ ५ ॥ |
| **कृ** | पाकरो | **धू** | म्रकेतुस् | **तुं** | दिलो | **दे** | ववल्लभः । |
| **त** | पस्वीशस् | **ता** | पहरो | **डा** | किनी | **वा** | रितोऽभयः ॥ ६ ॥ |
| **वि** | श्वप्रियो | **य** | क्षवंद्यो | **य** | ष्टा न | **य** | विवर्धनः । |
| **ना** | नारूपो | **धी** | र आद्यो | **धी** | मतां | **धी** | रकः सुधी ॥ ७ ॥ |
| **य** | मीश्वरो | **म** | हाहस्ती | **म** | हात्मा | **म** | ह उत्तमः । |
| **क** | र्ताऽर्ता | **हि** | तकरो | **हि** | तज्ञो | **हि** | तशासनः ॥ ८ ॥ |
| **स्तो** | तास्तव्यस् | **तन्** | त्रमूलस् | **तन्** | त्रज्ञस् | **तन्** | त्रविग्रहः । |
| **त्र** | यीवेद्यो | **नो** | दनाज्ञो | **नो** | दना | **नो** | दितद्विजः ॥ ९ ॥ |
| **मि** | त्राभो म | **द** | नस्मेरो | **दं** | ती म | **रु** | दुपासितः । |
| **दं** | डो प्रम | **त्तः** | शास्तार्यस् | **ती** | र्थ मिं | **द्रः** | स्तुतोऽपहा ॥ १० ॥ |
| **स** | त्यसंधः | **प्र** | काशात्मा | **प्र** | सन्नः | **प्र** | णतार्तिहा । |
| **मं** | त्रविद्या | **चो** | दितात्मा | **चो** | दना | **चो** | दिताखिलः ॥ ११ ॥ |
| **त्र** | यीधर्मो | **द** | शातीतो | **द** | क्षोऽभे | **द** | उमासुतः । |
| **कं** | नःसदे | | यात् प्रणुतोऽ | | यात् स पा | | यात् सदा भयात् ॥ १२ ॥ |

**इति श्रीमत्परमहंसपरिव्राजकाचार्य वासुदेवानंदसरस्वती विरचितं**
**दत्त-गणेश-शिव-गायत्री मंत्रगर्भं गणपतिस्तोत्रम्।**

तिस्तोत्रम्।

त शिवात्मजः।
त्पु रुषप्रियः ॥१॥
रु स्त्रिलोचनः।
षा स्थ्य आखुगः ॥२॥
य श आस्पदः।
वि घ्नकृद्विराट् ॥३॥
द्य विहापकः।
हे मदंष्ट्रकः ॥४॥
म तिमान्गुणी।
हा पितासुरः ॥५॥
दे ववल्लभः।
वा रितोऽभयः ॥६॥
य विवर्धनः।
धी रकः सुधी ॥७॥
म ह उत्तमः।
हि तशासनः ॥८॥
तन् त्रविग्रहः।
नो दितद्विजः ॥९॥
रु दुपासितः।
द्रः स्तुतोऽपहा ॥१०॥
प्र णतार्तिहा।
चो दिताखिलः ॥११॥
द उमासुतः।
यात् सदा भयात् ॥१२॥

**ासुदेवानंदसरस्वती विरचितं**
**गर्भं गणपतिस्तोत्रम्।**



पृष्ठ २८ वरील मंत्रगर्भ गणपतिस्तोत्रातील शब्दांत क्रमाने पुढील मंत्र गुंफलेले आहेत. चोवीस चरण आहेत. त्यांतील प्रत्येक चरणाचे पहिले अक्षर घेतले तर **''वासुदेवानन्दसरस्वतीकृतविनायकस्तोत्रमिदं समंत्रकं''**, प्रत्येक चरणाचे पाचवे अक्षर घेतले तर **''दत्तात्रेयाय विद्महे अवधूताय धीमहि तं नो दत्तः प्रचोदयात्''**, नववे अक्षर घेतले तर **''एकदंताय विद्महे वक्रतुंडाय धीमहि तं नो दंती प्रचोदयात्''** आणि बारावे अक्षर घेतले तर **'तत्पुरुषाय विद्महे** महादेवाय **धीमहि तं नो रुद्रः प्रचोदयात्'** हा मंत्र येतो. ह्या स्तोत्रात गणेशाची नामे गुंफली आहेत ती वेगळीच.

## मयूरकविविरचितम् संस्कृतमारात्रिकम्।

जयदेव जयदेव गजमुख सुख-हेतो
नेतर्विघ्नगणानां जाड्यर्णवसेतो॥ धृ०॥
येन भवदुपायनतां नीता नवदूर्वा।
विद्या—संपत्कीर्तिस्तेनाप्ताऽपूर्वा॥
मुक्तिर्लभ्या सुखतस्तव नित्याऽपूर्वा।
धार्या जगतः स्थितये भूमौ दिवि धूर्वा॥
जयदेव जयदेव० ॥१॥
प्रथमनमस्कृतिभाक् त्वं तव लोकप्रथितम्।
दृष्टं सद्व्यवहारे गुरुभिरपि च कथितम्॥
यःकश्चन विमुखस्त्वयि निजसिद्धेःपथि तम्।
विविधा विघ्ना भगवन् कुर्वन्ति व्यथितम्॥
जयदेव जयदेव० ॥ २॥
बालं सकृदनुसरति त्वद्दृष्टिश्चेत्ता।
मनुरासीमिव दास्यो विद्याः स हि वेत्ता॥
पविपाणिरिव परं परपक्षाणां भेत्ता।
भवति मयूरोऽहेरिव मोहस्य च्छेत्ता॥
जयदेव जयदेव० ॥ ३॥

